॥ श्रीदत्तात्रेयस्तोत्रं स्वागतं तव स्वागतं ॥

॥ ॐ ॥

स्वागतं तव स्वागतं गुरूदेव तव सुस्वागतम् ।
स्मरणचिन्तनपूजनात् निर्मले हृन्मन्दिरे ।
श्रीदत्त तव सुस्वागतं गुरूदेव तव सुस्वागतम् ॥

स्वागतार्थे प्राणज्योतिर्नयनद्वारे तिष्ठिता ।
चरणकमलक्षालनार्ता नयनजलसरितागता ॥

आसनार्थे हृदयपद्मं प्रेमगन्धविलेपनम् ।
भावकुसुमान्यर्पयेहं प्रणवमन्त्रैरर्चनम् ॥

योगधेनोर्दोहनं भक्तिक्षीरं सेवनम् ।
स्वानन्दकन्दं भोजनं सन्तोषनीरं प्राशनम् ॥

प्रणवगायनतत्परा तव प्रार्थने धन्या परा ।
तालबद्धं प्राणवहनं कुंडलिन्योर्नर्तनम् ॥

वेणुनादं प्रणवनादं श्रूयतां घंटारवः ।
तत्त्वमसि नीरांजनं सोऽहमिति मंत्रांजलिः ॥

गुरुदेव तव सुस्वागतं श्रीदत्त तव सुस्वागतम् ॥

॥ श्रीदत्तात्रेयस्तोत्रं २ ॥

॥ ॐ ॥

दत्तात्रेयं प्रियदैवतं सर्वात्मकं विश्वंभरम् ।
करुणार्णवं विपदाहरं चिन्मयं प्रणमाम्यहम् ॥ १॥

बालरूपं हास्यवदनं शंखचक्रयुतं प्रभुम् ।
धेनुसहितं त्रिशुलपाणिं चिन्मयं प्रणमाम्यहम् ॥ २॥

षड्भुजं स्तवनप्रियं त्रिगुणात्मकं भवतारकम् ।
शिवकारकं सुरवंदितं चिन्मयं प्रणमाम्यहम् ॥ ३ ॥

प्रणवगायनतोषितं प्रणवपद्मैः पूजितम् ।
प्रणवात्मकं परमेश्वरं चिन्मयं प्रणमाम्यहम् ॥ ४॥

कोटिभास्करसदृशं तेजस्विनं तेजोमयम् ।
सद्गुरूं गुरूणां गुरूं चिन्मयं प्रणमाम्यहम् ॥ ५॥

विश्वनाटकचालकं ज्ञानगम्यं निर्गुणम् ।
भक्तकारणसंभूतं चिन्मयं प्रणमाम्यहम् ॥ ६॥

बालयोगिध्यानमग्नं त्रिविधतापनिवारकम् ।
दीननाथं सिद्धिदं चिन्मयं प्रणमाम्यहम् ॥ ७॥

जनकजननीबंधुसुहृदाः आप्तसर्वास्त्वं मम ।
एहि एहि स्मर्तृगामिन् चिन्मय प्रकटी भव ॥ ८॥

॥ श्रीदत्तात्रेयस्तोत्रं ३ ॥

॥ ॐ ॥

श्री गुरूदेवाय नमः । श्रीगुरूदत्तात्रेयाय नमः ।
श्रीदत्तात्रेय जय दत्तात्रेय
जय परमात्मन् करुणासागर ।
जय जगदीश्वर जय विश्वंभर
जय दत्तात्रेय दत्त दिगंबर ॥ १॥

अनुसूयात्मज हरिहरब्रह्मन्
बटुवेषित सुकुमार मनोहर ।
अत्रितनय जय पतितपावन
जय दत्तात्रेय जय दत्तात्रेय ॥ २॥

हे त्रिगुणात्मक त्रिगुणरहित जय
त्रिभुवननायक जय भवतारक ।
कृतांतभयहर दीनदयाघन
जय दत्तात्रेय जय दत्तात्रेय ॥ ३॥

कौपिनधारिन् जटामुकुटधर
दंडकमंडलुमंडितकर जय ।
वटमूलस्थित स्मितमुखनिर्मल
जय दत्तात्रेय जय दत्तात्रेय ॥ ४॥

चंदनचर्चित भस्मविलेपित
सिद्धासनयुत जय योगेश्वर ।
जय श्रीपादश्रीवल्लभ जय
जय दत्तात्रेय जय दत्तात्रेय ॥ ५॥

ध्यानमग्न जय मुनिवर मंगल
नवनीरजसममिलीतलोचन ।
नवनाथप्रिय अलखनिरंजन
जय दत्तात्रेय जय दत्तात्रेय ॥ ६॥

ज्ञानसुधारसवर्षन् जय जय
श्रीनृसिंह जय रजकोद्धारक ।
सिद्धपुरूष जय समर्थस्वामिन्

जय दत्तात्रेय जय दत्तात्रेय ॥ ७॥

परब्रह्म विश्वात्मक जय हे
एक नित्य जय अनंत जय जय
वेदनिवेदित नेति नेति जय
जय दत्तात्रेय जय दत्तात्रेय ॥ ८॥

ज्योतिर्मय जय तेजोगिरि जय
आनंदघन सच्चिदानन्द जय ।
प्रणवात्मक जय हृत्कमलस्थित
दत्तस्वामिन् जय दत्तात्रेय ॥ ९॥

हे शाश्वत विश्वेश्वर भगवन्
मुक्तिप्रदाता महादेव जय ।
श्रीदत्तात्रेय जय दत्तात्रेय ॥

जय जय दत्तात्रेय दत्तात्रेय ॥ १०॥

॥ ॐ नमो भगवते दत्तात्रेयाय ॥

॥ श्रीदत्तात्रेयस्तोत्रम् ( नारदपुराण ) ॥

जटाधरं पांडुरांगं शूलहस्तं कृपानिधिम् ।
सर्वरोगहरं देवं दत्तात्रेयमहं भजे ॥ १॥

अस्य श्रीदत्तात्रेयस्तोत्रमंत्रस्य भगवान् नारदऋषिः ।
अनुष्टुप् छन्दः । श्रीदत्तपरमात्मा देवता ।
श्रीदत्तप्रीत्यर्थे जपे विनियोगः ॥

जगदुत्पत्तिकर्त्रे च स्थितिसंहार हेतवे ।
भवपाशविमुक्ताय दत्तात्रेय नमोऽस्तुते ॥ १॥

जराजन्मविनाशाय देहशुद्धिकराय च ।
दिगम्बरदयामूर्ते दत्तात्रेय नमोऽस्तुते ॥ २॥

कर्पूरकान्तिदेहाय ब्रह्ममूर्तिधराय च ।
वेदशास्त्रपरिज्ञाय दत्तात्रेय नमोऽस्तुते ॥ ३॥

र्हस्वदीर्घकृशस्थूल-नामगोत्र-विवर्जित ।
पंचभूतैकदीप्ताय दत्तात्रेय नमोऽस्तुते ॥ ४॥

यज्ञभोक्ते च यज्ञाय यज्ञरूपधराय च ।
यज्ञप्रियाय सिद्धाय दत्तात्रेय नमोऽस्तुते ॥ ५॥

आदौ ब्रह्मा मध्य विष्णुरंते देवः सदाशिवः ।
मूर्तित्रयस्वरूपाय दत्तात्रेय नमोऽस्तुते ॥ ६॥

भोगालयाय भोगाय योगयोग्याय धारिणे ।
जितेन्द्रियजितज्ञाय दत्तात्रेय नमोऽस्तुते ॥ ७॥

दिगम्बराय दिव्याय दिव्यरूपध्राय च ।
सदोदितपरब्रह्म दत्तात्रेय नमोऽस्तुते ॥ ८॥

जम्बुद्वीपमहाक्षेत्रमातापुरनिवासिने ।
जयमानसतां देव दत्तात्रेय नमोऽस्तुते ॥ ९॥

भिक्षाटनं गृहे ग्रामे पात्रं हेममयं करे ।
नानास्वादमयी भिक्षा दत्तात्रेय नमोऽस्तुते ॥ १०॥

ब्रह्मज्ञानमयी मुद्रा वस्त्रे चाकाशभूतले ।
प्रज्ञानघनबोधाय दत्तात्रेय नमोऽस्तुते ॥ ११॥

अवधूतसदानन्दपरब्रह्मस्वरूपिणे ।
विदेहदेहरूपाय दत्तात्रेय नमोऽस्तुते ॥ १२॥

सत्यंरूपसदाचारसत्यधर्मपरायण ।
सत्याश्रयपरोक्षाय दत्तात्रेय नमोऽस्तुते ॥ १३॥

BACK TO TOP

शूलहस्तगदापाणे वनमालासुकन्धर ।
यज्ञसूत्रधरब्रह्मन् दत्तात्रेय नमोऽस्तुते ॥ १४॥

क्षराक्षरस्वरूपाय परात्परतराय च ।
दत्तमुक्तिपरस्तोत्र दत्तात्रेय नमोऽस्तुते ॥ १५॥

दत्त विद्याढ्यलक्ष्मीश दत्त स्वात्मस्वरूपिणे ।
गुणनिर्गुणरूपाय दत्तात्रेय नमोऽस्तुते ॥ १६॥

शत्रुनाशकरं स्तोत्रं ज्ञानविज्ञानदायकम् ।
सर्वपापं शमं याति दत्तात्रेय नमोऽस्तुते ॥ १७॥

इदं स्तोत्रं महद्दिव्यं दत्तप्रत्यक्षकारकम् ।
दत्तात्रेयप्रसादाच्च नारदेन प्रकीर्तितम् ॥ १८॥

॥ इति श्रीनारदपुराणे नारदविरचितं
दत्तात्रेयस्तोत्रं सुसम्पूर्णम् ॥


```
% Text title            : dattAtreyastotram (nAradapurANa)
% File name             : datta.itx
% itxtitle              : dattAtreyastotram (nAradapurANAntargatam)
% engtitle              : dattAtreyastotram (nAradapurANa)
% Category              : deities_misc, dattatreya, stotra
% Location              : doc_deities_misc
% Sublocation           : deities_misc
% SubDeity              : dattatreya
% Texttype              : stotra
% Language              : Sanskrit
% Subject               : philosophy/hinduism/religion
% Latest update         : November 1, 2010
% Send corrections to   : Sanskrit@cheerful.com
% Site access           : https://sanskritdocuments.org
```




BACK TO TOP